होमं प्रशंसति— "यत्र वै यज्ञस्येति[1]। 'ह्रुत्वा' गत्वा 'रसः' यज्ञरसः सः 'अपः' 'प्रविवेश'। यः प्रविष्टो यज्ञरसः 'पूर्वेद्युः' वसतीवर्यग्रहणेनावशिष्टोऽस्ति, 'त मेव' रसम् 'अच्छ' अभिमुखीकृत्याभिगच्छति। पशुहोमाभावे यज्ञरसहरणार्थगमनासम्भवात् प्रचरण्याज्याकृतिहोम एव यज्ञरसाभिमुखगमन मित्यभिप्रायः॥ १२॥

आकृतिप्रस्तरणात्मनापि प्रशंसति— "यद्वेवैता माकृतिं जुहोतीति। 'यद्व एव' यदेव। 'एतत्' एतेन होमेन 'एत मेव' अवशिष्ट मेव 'यज्ञस्य रसम् अभिप्रस्तृणोते' रसस्य स्तरणं कृतवान् भवति। तेन च 'त मारम्भे' स्वाधीनं कृतवान् भवति। न केवल मेतदेव, अपि च 'याभ्यो देवताभ्यः' अग्न्यादिभ्यः 'एता माकृतिं जुहोति', 'ता एव' 'एतत्' एतेन होमेन 'प्रीणाति'। 'सव्रमन्ति' प्रापयन्ति॥ १३॥

होममन्त्रं विच्छिद्यानूद्य व्याचष्टे— "स जुहोति[2] शृणोत्वग्निरित्यादिना[3]। 'अग्निः', 'आपः', 'धिषणाः' वाचः, 'देवीः' देव्यः, 'विदुषो न ग्रावाणः', 'सविता' च, मे 'हवम्' आह्वानं 'यज्ञ मिमं शृण्वन्तु'— इति सङ्ग्रहार्थः। अत्र सर्वत्र "शृणोतु" 'शृण्वन्तु'-इति, "अनुजानातु" 'अनुजानन्तु'-इति चार्थपरतया व्याख्यातम्। 'श्रोता ग्रावाणः'-इत्यत्र "द्व्यचोऽतस्तिङः"-इति[4] दीर्घः। 'विदुषः'-इत्येतद् ग्रावविशेषणतया व्याचष्टे— "विद्वांसो हि ग्रावाण इति। प्रथमा-

---

१— अत मिद माख्यान मित्येव पुरस्तात् ( ५१२ पृ॰ १० पं॰ )।

२— का॰ श्रौ॰ सू॰ ८. ३. १ ख।

३— वा॰ सं॰ ६. २६. २। ४— पा॰ सू॰ ६. ३. १३५।

बहुवचने छान्दसं द्वितीयाबहुवचनम् । चरमपादे सवितृशब्दप्रयोगस्य तात्पर्य माह— "सविता वै देवानां प्रसवितेति ॥ १४ ॥

"अथापरं चतुर्गृहीत मिति[1] । पूर्व मेकवारग्रहणस्योक्तत्वादपर मित्युक्तम् । चत्वारि गृहीतानि ग्रहणानि यस्याज्यस्य तच्चतुर्गृहीतम् । अप्सु होमार्थं गृहीत्वा उदङ्मुखं गच्छन् यजमानः प्रैषान् ब्रूयात् ॥

तत्र प्रथमप्रैष मुक्त्वा व्याचष्टे— "अप इष्य होतरिति"-इत्यादि[2] । हे 'होतः !' 'अपः' प्रति 'इष्य' इच्छ, अपः प्रतिगमनोचितं प्रदेवत्रेति[3] अपोनप्त्रीय[4] मनुब्रूहीत्यर्थः । इष्यतेरिच्छतिरर्थ इति व्याचष्टे— "अप इच्छ होतरित्येवैतदाहेति । पदं व्याख्याय तात्पर्य माचष्टे— "तद्यदतो होतान्वाहेति । गतोऽर्थः । "एता उ चैवैतदाहेति । 'उ'-शब्दोऽप्यर्थे । अपि च 'एताः' एकधनाख्या अप उद्दिश्य 'एतत्' अनुतिष्ठते । एतदित्युक्तम्, किं तदित्याह— "नेदेना इति । 'एनाः' अपः । 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'हिनसन्' हिंस्युः । नेदिति परिभवे । "नेत्येष इदित्येतेन समयुज्यते परिभवे"-इति नैरुक्तम्[5] । अतस्तासां हिंसा माभूदित्यर्थः ॥ १५ ॥

---

१— का० श्रौ० सू० ८. ३. २ क ।

२— का० श्रौ० सू० ८. ३. २ ख । होतारं प्रत्यध्वर्युराह ।

३— "प्रदेवत्रा"-इत्याद्यपोनप्तृदेवताकं सूक्त मपोनप्त्रीयम् ( ऋ० सं० १०. ३०. ) । ऐ० ब्रा० २. ३. १ द्रष्टव्यम् ।

४— 'आपोनप्त्रीयम्'-इति छ-पुस्तके ।

५— निरु० १ अ०. ३ पा०. ६ ख० ।

अन्यान् प्रैषान् दर्शयति— "अथ सम्प्रेष्यतीति । "मैत्रावरुणस्य चमसाध्वर्यवेहीति[1] । दश चमसाध्वर्यवः चमसप्रोक्तारः, तेषु यो मैत्रावरुणस्य चमसाध्वर्युः, स सम्बोध्यते । 'एहि' उदकानयनार्थं स.गच्छेति ॥

"नेष्टः पत्नीरुदानयेति[2] । हे 'नेष्टः !' त्वं 'पत्नीः' पान्नेजनोद-भाराहरणार्थम् 'उदानय' ॥

"एकधनिन एतेति[3] । एकधना उदकानि, तेषां धारका' कुम्भा वा ; प्रत्यगेकधनानयुग्मानित्यासादनाभिधानात् ; तेषां ग्रहो-तारः 'एकधनिनः' 'एत' आगच्छत ॥

"अग्नीच्चात्वाल इति[4] । हे 'अग्नीत् !' त्वं पूर्वेद्युर्गृहीताभिः वस-तीवरीभिः', 'होतृचमसेन' 'च' युक्तः सन्, चात्वालदेशे यावदागमनं 'प्रति' 'उपतिष्ठास्व' उपतिष्ठेति निर्दिष्टः ॥

एतेन मन्त्राश्चेद् व्याख्यातव्याः विधयश्चेत् स्तोतव्या इत्याशङ्काह— "सम्प्रैष एवैष इति । 'एषः' "मैत्रावरुणस्य चमसाध्वर्यो"-इत्यादिकः कर्त्तव्यः 'सम्प्रैष एव' विस्मृतिपरिहारार्थं प्रेषण मित्यर्थः ॥ १६ ॥

तेषां जलानयनार्थं निर्गमनमार्ग माह— "त उदञ्चो निष्क्राम-न्तीति । आग्नीध्रचात्वालयोरन्तरालदेशेन उदग्देशेन । तत्र नोप-लभ्यन्ते कथ मित्यत आह— "स यस्यां ततो दिशीति । निर्गमने

१— का० श्रौ० सू० ६. ३. ३ । इति चमसाध्वर्युम् ।

२— का० श्रौ० सू० ६. ३. ४ । इति नेष्टारम् ।

३— का० श्रौ० सू० ६. ३. ५ । 'एकधनिनः' ऋत्विजः सर्वे ।

४— का० श्रौ० सू० ६. ३. ६ ।

एव उदङ्नियमः। गमनसमये पत्नीसाहित्यं विधाय तदाख्यान-मुखेन प्रशंसति— "सह पत्नीभिर्यन्तीति[1]— ॥ १७ ॥

"यत्र वै यज्ञस्येत्यादि। पुरा किल देवैर्यज्ञशिरश्छेदादुद्गतं रसं पलाय्य अप्सु निविष्टम्, तं रसं गन्धर्वाः सोमपालका रक्षुः— ॥ १८ ॥

"ते ह देवा इति। 'ते देवा ऊचुः'— 'इमे गन्धर्वाः' एव 'नाष्ट्राः' नाशकरूपाः, 'कथम्' 'अनाष्ट्रे' नाशरहिते देशे 'रसं' यज्ञरसम् 'आहरेम' 'इति'— ॥ १९ ॥

एवं विचार्य— "ते होचुर्योषित्कामा इति। गन्धर्वा योषित्प्रियाः, तद्वयं पत्नीभिः सहिता एव गच्छामः, ते च गन्धर्वाः पत्नीषु काङ्क्षन्ति, तस्मिन् समये वय मभयेऽनाष्ट्रे यज्ञरस माहरिष्याम इति ॥ २० ॥

"ते सह पत्नीभिरीयुरिति। ताभिः सह गताः, ते च तथैव तासाकाङ्क्षां कृतवन्तः। तस्मिन् समये देवाः यज्ञरसम् 'आजह्रुः' ॥ २१ ॥

"तथो एवैष एतदिति। यथा पुरा, इदानी मपि तथैव। तदेतेन पत्नीभिः सह गमनेन एते गन्धर्वाः पत्नीषु काङ्क्षां कुर्वन्तो भवन्ति, तथा अबाधितस्सन् रस माहृतवान् भवति ॥ २२ ॥

प्रचरणीगृहीतस्याज्यस्याप्सु होमं विधाय प्रशंसति— "सोऽपोऽभिजुहोतीति[2]। 'ऊता माऊतिम्' अनुसृत्य 'एषः' अनुप्रविष्टः

१— "सहगमनमात्र मत्र विधीयते"–इति या० दे० का० सू० ६. ३. ७।

२— का० श्रौ० सू० ६. ३. ७।

'यज्ञस्य रसः' 'उपसमेति' अभिमुखं सम्प्राप्नोति। एतस्यैव व्याख्यानम्— "तां प्रत्युत्तिष्ठतीति। 'त मेव' रसम् 'एतत्' एतेन होमेन 'आविष्कृत्य' उदकेष्वनुप्रविष्टं प्रादुर्भाव्य गृहीतवान् भवति ॥ २३ ॥

प्रकारान्तरेणापि प्रशंसति— "यद्ध्वैता माहुतिं जुहोतीति। न केवलं रसार्थं प्रस्तरणं किन्तु तं प्रवर्द्धन्तं रस मारूढवान् भवति। किञ्च 'तम्' अपेक्षितं यज्ञरसम् 'अपः' उदकानि 'याचति', 'उ' अपि च 'याभ्यः देवताभ्यः एताम् आहुतिं जुहोति', 'ता एव' 'एतत्' एतेन 'प्रीणाति'। 'तृप्ताः' 'प्रीताः' च 'ताः' 'अस्मै' यजमानाय 'एतं यज्ञस्य रसं' 'सन्नमन्ति' सन्नमयन्ति, यजमानाधीनं कुर्वन्ति ॥ २४ ॥

मन्त्रं विधाय विच्छिद्य व्याचष्टे— "स जुहोतीति। "देवीराप इति[1]। हविष्य इति पदं व्याचष्टे— "यो व ऊर्मिर्हविष्य इति, यो व ऊर्मिर्यज्ञिय इत्येवैतदाहेति। हविश्शब्देन तत्साध्यो यज्ञो लभ्यते; द्रव्यदेवतयोर्हि यज्ञस्वरूपत्वात्। इन्द्रियशब्दस्य वीर्य मर्थ इति व्याचष्टे— "इन्द्रियावान् मदिन्तम इति, वीर्यवानित्येवैतदाहेति। स्पष्ट मेतत्। तत्रैव वाक्ये मदिन्तमशब्दस्यार्थ माह— "मदिन्तम इति, स्वादिष्ठ इत्येवैतदाहेति। यत् स्वदन्त मुन्मादयतीति। "तं देवेभ्यः"-इतिभागस्य प्रार्थनायां तात्पर्य मिति व्याचष्टे— 'एतत्' एतेन 'अयाचिष्ट', 'यदाह त देवेभ्यो देवत्रा दत्तेति'। "लोट् च"-इति[2] लोटो विध्याद्यर्थेषु मध्ये प्रार्थनाया

---

१— वा० सं० ६. २७. १।

२— पा० सू० ३. ३. १६२।

सम्भवात् 'एतत्' एतेन मन्त्रभागेन 'एनाः' अपः 'अयाचिष्ट' देवतार्थं याचितवान् भवति। "देवेभ्यः"-इत्यस्य यत् "शुक्रपेभ्यः"-इति विशेषणम्, तस्य तात्पर्य माह– "सत्यं वै शुक्रम्, सत्यपेभ्य इत्येवैतदाहेति। शुक्रं दीप्तम्, रसाख्यं वस्तु, तत् सत्यम्। सोमद्वारेण सत्यस्यामृतत्वधर्मस्य साधनत्वात् सत्य मित्युच्यते। तादृशस्य पातृभ्य इत्येतदेवैतत् शुक्रपेभ्य इति वाक्य माहेत्यर्थः। "येषां भाग स्थ स्वाहा"-इति चरमभागस्य तात्पर्य माह– "तेषा मु ह्येष भाग इति। 'एषः' अपां शुक्ररसरूपो भागः, 'तेषा मु' तेषां शुक्रपानां देवानां 'भागः' प्रतिनियतांशः खलु; अतो येषा मिति मन्त्रे निर्दिष्ट इत्यभिप्रायः॥

मन्त्रस्याय मर्थः।– हे 'देवीः' देव्यः! 'आपः!' हे 'अपान्नपात्' न पातयति तत्[1], 'यः' अयं 'वः' युष्माकं सम्बन्धी 'ऊर्म्मिः' प्रवृद्धः 'हविष्यः' रसः, 'इन्द्रियावान्' "मन्त्रे सोमाश्वेन्द्रियेत्यादिना[2] दीर्घः, इन्द्रियवान्, 'मदिन्तमः' मादयितृतमः, 'तं' रसं 'देवत्रा' "देवमनुष्येत्यादिना[3] सप्तम्यर्थे त्रा-प्रत्ययः। देवेषु मध्ये 'शुक्रपेभ्यो देवेभ्यः' 'दत्त' प्रयच्छत'। हे आपो यूयं 'येषां' देवानां 'भागः' 'स्थ' भवथ, तदर्थं 'स्वाहा' इदं द्रव्यं स्वाहुत मस्त्विति॥ २५॥

हुताया आहुत्या अपसारणं समन्त्रकं विधत्ते– "अथ मैत्रावरुणचमसेनेति[4]। तत्र मन्त्रः– "कार्षिरसीति[5]। हे हुताज्य-

---

१— निरु० ८. २. २, १०. २. ५, ऋ० सं० १. १४३ सा० भा० द्रष्टव्यम्।

२— पा० सू० ६. ३. १३१। ३— पा० सू० ५. ४. ५६।

४— का० श्रौ० सू० ९. ३. ८। ५— वा० सं० ६. २८. १।

पदार्थ ! त्वं 'कार्षिः' कृषेर्देवतायाः, कर्षणस्य भक्षणस्य वा सम्बन्धी 'असि'। अतस्त्वां 'समुद्रस्य' समुन्दनरूपस्योदकस्य 'अक्षित्यै' अक्षीणतायै 'त्वा' त्वाम् 'अपनयामि' अपसारयामि[1]। उक्तस्यापसारणस्य प्रयोजकं ख्यातत्व माह— "यथा वा अङ्गारोऽग्निना ख्यातः स्यादिति। 'ख्यातः' भक्षितः; 'अग्निना' भक्षितः 'अङ्गारः' 'यथा' करीषभावेन त्याज्यो भवति, 'एवम्' 'एषा आकृतिः' 'एतया' अब्देवतया 'ख्याता भवति'। सोमहिंसापरिहारत्वेनापि परित्यक्तव्य मित्याह— "राजानं वा एताभिरिति। 'मैत्रावरुणचमसे' 'याः' 'एताः' इदानीं गृह्यमाणा आपः सन्ति, 'एताभिः' अद्भिः 'उपसृक्ष्यन्' अभिषवकाले सोमस्य संसर्गं करिष्यन् 'भवति'; अत एव "आधवनीये समवनयति"-इति वक्ष्यते[2], आधवनीये संसृष्टस्योदकस्य सोमरसेन संसृज्यमानत्वात्। "वज्रो वा आज्यम्"-इत्यादि, प्रागसकृद् व्याख्यातम्[3], "घृतं खलु वै देवा वज्रं कृत्वे"त्यादिप्रदर्शनेन[4] ॥ २६ ॥

समन्त्रकं मैत्रावरुणचमसेनोन्नयनं विधत्ते— "अथ गृह्णाति

---

१— 'उन्नयामि' इत्येव मूलपाठः। 'गृह्णामि'-इति च तदर्थः कृतो महीधरेण, सूत्रे विनियोगस्य तथाविध एव, अनुपदं वक्ष्यति चेहोत्तरस्यां कण्डिकायां तथैव। नास्ति चैतन्मन्त्रस्येह व्याख्याने कश्चिदुपयोगः। कार्षिरसीत्येव ह्येको मन्त्र इह विनियुक्तः।

२— इहैव त्रिंश्यां कण्डिकायां द्रष्टव्यम् ( ५५१ पृ० १० पं० )।

३— १का० ४प्र० ४ब्रा० ४क० ( १ भा० ३६२ पृ० ७ पं० )।

४— तै० सं० ६. ३. ७. १६।

समुद्रस्य त्वेति[1]। यद्यप्यत्र मैत्रावरुणचमसेनेति न श्रुतम्, तथापि "समुद्रस्य त्वेति तेन गृह्णाति[2]"-इतिसूत्राद् गम्यते। अपां सङ्घात्मकत्वात् समुद्रस्य "आपो वै समुद्रः"-इत्येकदेशस्य तत्तदात्मना स्तुतिः। 'एतत्' एतेन "समुद्रस्य त्वाक्षित्यै"-इतिपाठेन 'अप्सु एव' 'अक्षितिम्' अक्षय मक्षीणत्वं 'दधाति' स्थापितवान् भवति। 'तस्मात्' "अक्षित्यै"-इत्युक्तत्वात् 'एतावति भोगे भुज्यमाने' स्थावरजङ्गमात्मकजगत्पर्याप्तेऽपि भोगे सर्वैर्भुज्यमानेऽपि 'न क्षीयन्ते' क्षयं न प्राप्नुवन्ति, अजस्रं प्रवहन्त्येव। "तदश्मित्यादि। होतृचमसोन्नयनानन्तर मेकधनाना मुन्नयनम्[3], ततः पात्नेजनानां पत्न्या इति[4] ॥ २७ ॥

सत्स्वितरेषां चमसेषु किं मैत्रावरुणचमसेनेत्यत आह— "तद्यन्मैत्रावरुणचमसेनेति। यस्माद् देवेभ्योऽपक्रान्तं यज्ञम्, एतेन मैत्रावरुणाख्येनर्त्विजा 'प्रैषैः' तत्कृतिगमनसाधनैः आह्वानवाक्यैः 'प्रैषं' यज्ञस्य गमनम् 'ऐच्छन्'; 'निविद्भिः' निवेदनसाधनैः "अग्निर्देवेद्धः"-इत्यादिभिः[5] वाक्यैः 'न्यवेदयन्' परस्परं निवेदितवन्तः; 'पुरोरुग्भिः' 'पुरः' याज्यानुवाक्याभ्यां पुरस्तात् 'रुचिम्' इच्छां जनयन्ति देवताया इति पुरोरुचो "वायुरग्रेगाः"-

---

१— वा० सं० ६. २८. २।

२— का० श्रौ० सू० ९. ३. ९। 'तेन मैत्रावरुणचमसेन'-इति तत्र वृत्तिः।

३— का० श्रौ० सू० ९. ३. १०।

४— "पात्नेजनांश्च पत्न्यो द्वौ-द्वौ"-इति का० श्रौ० सू० ९. ३. ११।

५— निविदः १-१२ पदानि, ऐ० ब्रा० २. ५. २ प्रपञ्च विहितानि।

इत्याद्याः[1], ताभिः 'प्रारोचयन्' प्ररोचना मजनयन्। अतो मैत्रावरुणस्य प्रैषादिसाधनत्वात् तदीयश्चमसः प्रशस्त इत्यर्थः। "तस्मात् मैत्रावरुणचमसेन रद्धातीति ॥ १८ ॥

अप्प्रणयनानन्तर मनुष्ठेयं विधत्ते— "त आयन्तीति। पुनर्देवयजनं प्रति आगच्छेयुः। 'अग्नीत्' च निर्गमनकाले सम्प्रेषितप्रकारेण 'चात्वाले' 'वसतीवरीभिः' अद्भिः 'होतृचमसेन च' युक्तः सन् प्रत्युपस्थानं कुर्यात्। यदुक्तं सूत्रकृता— "प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति, इतरस्मिन् व्यानयन्त्येके, मैत्रावरुणचमसे प्रथम मिति[2], तदिदं सर्वं विधत्ते— "स उपर्युपरि चात्वालं संस्पर्शयति, वसतीवरीश्च मैत्रावरुणचमसञ्चेति। स्पष्टम् ॥

तत्र मन्त्र माह— "स मापो अद्भिरिति[3]। 'आपः' मैत्रावरुणचमसगताः, 'अद्भिः' होतृचमसस्थाभिर्वसतीवरीभिः 'समग्मत' सङ्गता अभवन्। तथा 'ओषधीः' ओषध्यः, वर्द्धनीयाः व्रीह्यादिरूपाः, 'ओषधीभिः' व्रीह्यादिरूपाभिः 'समग्मत'[4]। यद्वा, उभयत्र

---

१— पुरोरुचः १–७ ऋचः, वा० सं० १७. ३१–३७, ऐ० ब्रा० ३. १. ६ नामोल्लेखमात्रेण विहिताः।

२— का० श्रौ० सू० ६. ३. १२, १३, १४।

३— वा० सं० ६. २८. ३।

४— " 'ओषधीः' ओषधयो मुद्गमसूरादिकाः, 'ओषधीभिः' व्रीहियवादिभिः 'समग्मत' सङ्गच्छन्ताम्, अपां कारणभूतत्वात् ओषधीना मपि योगोऽस्तु"–इति महीधरः।

ओषधिशब्देन प्रकृता मैत्रावरुणहोतृचमसगता आपो विवक्ष्यन्ते।
"यस्यासौ पुर्वेद्युरित्यादि, स्पष्टम् ॥ २९ ॥

अत्र केषाञ्चित् साक्षात् उदकसंसर्जनपक्ष मुदाहृत्य तदभिप्राय मप्याविष्कृत्य तस्यान्यथासिद्धित्वप्रदर्शनेन निराचष्टे— "तद्धैक इति। 'ऐव[1] नयन्ति'-इति सम्बन्धः, आनयन्त्येवेत्यर्थः। 'आ मैत्रावरुणचमसाद् वसतीवरीषु' उपसर्गवशात् नयन्तीत्यनुषज्यते। एवं कुर्वतां पूर्वेद्युराहृतस्य यज्ञरसस्य, अद्याहृतस्य च संसर्ग एवोऽपेक्षितः, स उपरिष्टात् आधवनीये समवनयनाद् भविष्यति, अतः 'तत् तथा न कुर्यात्' इति ॥

यदुक्तं[2] "होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः इति, तदेतदाह— "अथ होतृचमस इति। आग्नीध्रहस्तस्थं होतृचमस मध्वर्युरादाय पूर्वेद्युराहृताः 'वसतीवरी.' अध्वर्युः 'गृह्णाति'। कस्मै उपयोगाय? 'निग्राभ्याभ्यः', होतृचमसे निगृह्यमाणत्वात् "निग्राभ्या"-इति सञ्ज्ञा[3]; निग्राभ्यासु च्यावयति, निग्राभ्यासु संसिञ्चति, इत्येवमर्थाय ॥

पूर्वं यदुक्तं "यस्यासौ पूर्वेद्युरित्यादि, संसर्गस्य चात्वालोपरिभावित्वम्, तत् प्रशंसति— "तद्यदुपर्युपरि चात्वाल मिति। 'अतः'

---

१— 'एवं'—इति च।

२— सूत्रकृतेति शेषः। का० श्रौ० सू० ६. ३. १५।

३— "अध्वर्युर्होतृचमसे वसतीवरीः कृत्वा आसिच्य यजमानाय समर्पयति, ताश्चाध्वर्युणा यजमानाय समर्पितास्तमसस्था आपो निग्राभ्यसञ्ज्ञका अभिषवार्थाः; ताभ्य एव च ग्रहा अपि ग्रहीष्यन्ते"—इति या० दे०।

अस्मात् चात्वालोपरिप्रदेशात् 'देवा, दिव मुपोदक्रामन्', 'तत्' तस्मात् कारणात् 'एतत्' एतेन चात्वालोपरिसंस्पर्शेन 'यजमानम्' अयं स्वर्गस्य पन्था इति 'पन्थानम्' 'अनुसङ्ख्यापयति' अनुक्रमेण सङ्ख्यापयति, सम्यक् प्रख्यापयतीति यावत् ॥ ३० ॥

"त आयन्तीति। अथाध्वर्यु मुद्दिश्याब्विषयं होतुः प्रश्न मव-तारयति— "तं होता पृच्छत्यध्वर्योऽवेरपा३ इति। 'तम्' अध्वर्युं होता 'पृच्छति', हे 'अध्वर्यो!' 'अपः' उदकानि 'अवेः' लब्ध-वानसि। प्लुतिः प्रश्नार्थे[1]। "अवेः"-इत्यस्य 'अविदः' इत्यर्थ इति व्याचष्टे— "अविदोऽपा३ इत्येवैतदाहेति ॥

अथाध्वर्युर्होतारं प्रति प्रतिवचन माह— "तं प्रत्याहोतेव नन्नमुरितीति[2]। वय मिदानीं न केवल मपो लब्धार एव, अपि च 'नन्नमुः' अत्यर्थं मानता अभवन्। प्रतिवचनस्य तात्पर्य माह— "अविद मयो मेऽनंसतेत्येवैतदाहेति। 'अविदम्' अपो लब्धवानस्मि 'अयो' अपि च 'मे' आपः 'अनंसत' आनता आगता अभूवन् 'इत्येव' 'एतत्' उत्तररूपं वाक्यम् 'आह' ॥ ३१ ॥

यदुक्तं सूत्रकृता— "प्रचरणीसंस्रव मग्निष्टोमे जुहोत्यभावे चतु-र्गृहीतं य मग्न इति, उक्थ्ये प्रथमं परिधि मालभते, प्रविशत्यत्रा-न्यत्र"-इति[3], तदेतत् क्रमेण दर्शयन्नादावग्निष्टोम माह— "स

१— पा० सू० ८. २. १०० ।

२— "होत्रा पृष्टः"-इत्यादि का० श्रौ० सू० ६. ३. १५ ।

३— का० श्रौ० सू० ६. ३. १६, १७, १८ ।

यद्यग्निष्टोमः स्यादिति। 'सः' वर्त्तमानः क्रतुरग्निष्टोमसंस्थश्चेत् 'प्रच-रणां' यः 'संस्रवः' अवशिष्टः 'होमाय' 'अलम्' पर्याप्तः 'स्यात्', तदा 'तम्' एव 'जुहुयात्'; नो चेत् पुनश्च 'चतुर्गृहीत माज्यं' 'गृहीत्वा' "य मग्ने पृत्सु"-इति[1]मन्त्रेण जुहुयात् ॥

मन्त्रस्याय मर्थः।– हे 'अग्ने!' 'यम्' 'मर्त्यं' मनुष्यं 'पृत्सु' सङ्ग्रामेषु 'अवाः' रक्षसि, तथा 'वाजेषु' अन्नेषु निमित्तभूतेषु 'यम्' मर्त्यं 'जुनाः' जवतिर्गत्यर्थः प्राप्तवानसि, 'सः' उभयविषयो जनः 'शश्वतीः' शाश्वतीः 'इषः' अन्नानि 'यन्ता' प्राप्तवान् भवति; 'स्वाहा' सुहुत मस्तु ॥

मन्त्रस्याग्नेयत्वं प्रकृते ज्योतिष्टोमकर्मणि सङ्गत मिति व्याचष्टे– "आग्नेय्या जुहोतीति। "अग्निर्वा अग्निष्टोम इति। यज्ञायज्ञीय-स्यान्तिमस्तोत्रस्याग्निदेवताकत्वात्[2] अग्निष्टोमोऽग्निः; ततोऽग्न्यात्मक मग्निष्टोम माग्नेय्या होमेन 'अग्नौ' एव प्रतिष्ठापितवान् भवति। मन्त्रे यत् मर्त्तलिङ्गकत्वम्, तत् प्रशंसति– "मर्त्तवत्या; पुरुषसम्मितो वा अग्निष्टोम इति। "द्वौ स्तोमौ प्रातस्सवनं वहतो यथा प्राणश्चा-पानश्च"-इत्युपक्रम्य तैत्तिरीयके "पुरुषसम्मितो वा एष यज्ञ इति[3]श्रुतत्वात् पुरुषसम्मितत्व मस्य यतः, अत एवैतया मर्त्तवत्या

---

१— वा० सं० ६. २८. १।

२— ता० ब्रा० ६ अ० १ ख०—८ अ० ७ ख० पर्यन्तं द्रष्टव्यम्। तत्रैतदन्त्य-खण्डस्तु विशेषतो द्रष्टव्यः।

"अथ परिधिम्"। 'अभिपद्य' अभिगम्य, हस्तेनालभ्येत्यर्थः[१]। "परिधिभ्यो होति। ननु सूक्तवाकप्रैषायैतदाश्रावयति, तद्वारेण च सूक्तवाकदेवताभ्यः प्रस्तराय वा, परिधीनां किं मापतितम्? सत्य मेतत्। तद्देवत्वाद्यज्ञार्थाः परिधयः, तेन प्रसिद्धयज्ञोपकरणे-माश्रावणेन परार्थेनारोप्यालभ्य क्रियमाणेन लेशतो यज्ञभाजः कृता भवन्तीत्युपकारमात्रलक्षणार्था तादर्थ्ये चतुर्थी प्रयुक्ता। प्रत्यक्ष मव्यभिचारि यज्ञरूप माश्रावणम्, तेन 'एतत् प्रत्यक्षम्' यो यज्ञः; जुह्वत् होमेष्वपि यज्ञेष्वपि भवतीति तन्न तथा प्रत्यक्षः। जुह्वाञ्जने यज्ञः ॥ ९ ॥

"स आश्राव्याह"। "दैव्या वा एते होतारो यत्परिधयः"—इति प्रतिज्ञा। "अग्नयो होति हेतुवचनम्। 'इष्टाः'—इति। इषितव्याः इच्छया स्थानम् अधीष्टाः[२], सान्त्विता इत्यर्थः[३] ॥ १० ॥

"अथ प्रस्तरम्"। 'स्वगा' अव्यय मेतत्, स्वस्थानगामिवचनम्; स्वस्थानगामिनं करोतीत्यर्थः[४]। 'अगन्' अगमन्, गत इत्यर्थः। 'अपिनयति' सन्नयति[५] ॥ ११ ॥

"स यदि वृष्टिकामः"। काम्यतया मन्त्रं विधाय, नित्यतयापि

---

१— का० श्रौ० सू० ३. ६. १। २— 'इच्छयाख्यात मधीष्टाः'—इति ठ।

३— "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि"—इति तदाश्रावणानन्तरपाठ्यो मन्त्रः का०श्रौ० ३. ६. १।

४— "स्वगा स्वाधीनम्"—इति तै० सं० सा० भा० १. ४. ४४. ५।

५— "सन्नागाया मिति प्रस्तरादानम्"—इति का० श्रौ० सू० ३. ६. ३। अस्य च मन्त्रः वा० सं० आम्नातः (२. १६. ४.)।

त मेव विधत्ते– "त मेतेनैवाददीतेति। "यदा ह्येवेति। सर्वदैव वृष्टिः सुखम्; ततश्च सर्व एव वृष्टिकाम इत्यभिप्रायः। ततश्च स्वर्गादिकामेनाप्यविरुद्धत्वात् प्रयोक्तव्य एवैषः। "आकृति मेवैत-दिति। अञ्जनेनायं होमयोग्यो भवतीत्यभिप्रायः ॥ १२ ॥

"स वा अग्रम्"। 'अग्रम्' अग्र मिव जुहूः; सा ह्युपभृतं हित्वाहवनीयं यावद्याति। 'मध्यम्' मध्य मिवोपभृत्; सापि हि वेदेर्यजतिस्थानं यावदुत्क्रामति। 'मूलम्' मूल मिव ध्रुवा; न हि सा चलति क्वचित्[१] ॥ १३ ॥

"सोऽनक्ति"। 'व्यन्तु' खादन्तु इमं प्रस्तरं देवाः, येभ्यो हूयन्ते। कीदृशम्? 'वयः' पक्षिभूतं गतं सत् तेनाहवनीयं द्युलोकं वा — इत्येवं मन्त्रार्थं "वय एवैनम्"–इति दर्शयति[२] ॥ १४ ॥

"स हरति[३]"। "इयं भूत्वेति। यथा 'इयं' पृथिवी मूलममूला अन्तसंस्पृष्टा 'पृश्निः', तद्योगाच्च 'वशा' वश्या काम्या; एवं त्व मपि दर्भमयत्वान्मूलिनान्तेनोपेतः, एतेन वा मूलेन; ततश्च 'इय मिव भूत्वा'–इत्येत मर्थं[४] मनेनाह। 'वृष्टाद्दा ऊर्जस्वः', 'सुभूतं' भूतानां समृद्धिः 'जायते' इति वृष्ट्यावाहनप्रयोजनम् ॥ १५ ॥

"अथैकं तृणम्"। यदेकं तृण मपगृह्णाति, तथा क्रियमाणः

---

१— "अग्रं जुह्वाम्, उपभृति मध्यम्, मूल मितरस्याम्"–इति का० श्रौ० ३. ६. ५, ६, ७ सूत्राणि। २— वा० सं० २. १६. ५।

३— का० श्रौ० सू० ३. ६. ८। तन्मन्त्रस्तु— वा० सं० २. १६. ६।

४— 'इत्येतत् सर्वं'–इति ढ।

'यजमानः' 'ज्योक्' चिरं 'जीवति'। एवं तावत् कृत्यानुप्रहरण-कृतदोषपरिहारायापघ्नातीत्युक्तम्; अधुना तु अन्यकृतोऽप्यायुषः क्षयो तेनापघ्नणेन रक्षत इत्याह— "यावद्वेवेति। 'उ'-शब्दश्चार्थे। 'यावत्' च 'इह' लोके 'अस्य' 'मानुषम्' पूर्वकर्मोपात्तम् 'आयुः' 'तस्मै एव एतदपघ्नाति'—इति। 'एव'-शब्दः समुच्चये ॥ १६ ॥

"तन्मुहूर्त्तम्"। प्रसज्ञा ॥ १७ ॥

"तं प्राञ्च मनु"। 'तं' प्रकृतं प्रस्तरं 'प्राञ्चं' प्रागग्रं सूक्तवाके उक्तप्राये[1] 'अनु' पश्चात् 'समस्यति' समग्र मेव प्रक्षिपति। "न मङ्गुलिभिरेव योयुप्येरन्"। "युप रुप लुप विमोहने[2]"। पुनः-पुनस्तं मूर्च्छयेयुः, 'न काष्ठैः'; हस्तेनोपक्षिपेयुरित्यर्थः। किं कारणम्? "दारुभिर्वा इतरं मानुषं शवं वि क्षपन्ति"। "क्षप क्षपी गतौ[3]" नयनेऽत्र द्रष्टव्यः। विस्तारयन्ति, सुगन्धिलायेत्यर्थः[4]। तदुपचाराच्चास्य यज्ञियस्य विलक्षणेनोपचारेण भवितव्य मिति। "नेत्त्वयेति। 'नेत्'—इति परिभये। तत्त्वयेत्याह ॥ १८ ॥

"अथाग्नीदाह"। प्रसज्ञा[5] ॥ १९ ॥

---

१— 'उक्ते पश्चात् समग्र मेव प्रक्षिपति'—इति ढ।

२ — 'युपु रुपु लुपु विमोहने'—इति दि० प० १२९-१३१ धा०।

३— तु० प० ७ धा०। ४ — 'सुदग्धलायेत्यर्थः'—इति ज, झ, ढ।

५— "अग्नीदाहानुप्रहरेति"—इति च का० श्रौ० सू० ३. ६. १३। अध्वर्युं प्रति। तत् प्रस्तरानुप्रहरणं यजमानभागहवनश्चैतदुभयं सूक्तवाकान्ते भवति। अनुप्रहरणानन्तरञ्चात्मोपस्पर्शनं कर्त्तव्यं भवति। का० श्रौ० ३. ६. १५ सू० द्रष्टव्यम्। तत्र चक्षुष्पा इति मन्त्रो विनियुज्यते। स हि वा० संहितायामाम्नातः (२. १६. ७.)।

"अथाह"। 'संवदस्वेत्यादीनां आहुतीनां[1] वाक्यस्यायमर्थः।— अग्नीदध्वर्युं प्रेष्यति— 'संवदस्व' त्वं मया सह शंयुवाक[2]प्रैषार्थमिति। त मध्वर्युः पृच्छति— 'अगानग्नीत्' हे अग्नीत्! किमगमत्प्रस्तरशरीरो यजमानः स्वर्गं लोकम्? किं दग्धः प्रस्तर इत्यर्थः। अग्नीत्तु 'अगन्' इति प्रतिवचनं ददाति। गतो यजमानः, दग्धः प्रस्तर इत्यर्थः। अध्वर्युस्त्वाह— यद्येवम्, ततः शंयुवाकपरिधिप्रहरणयोः कालो वर्त्तते, ततश्च 'श्रावय' होतारम्, आकर्षयेत्यर्थः। अग्नीच्चाह— 'श्रौषट्' शृणोत्येवाय मवहितः, ब्रूहि त्वं यद्विवक्षितमिति ॥

"स्वगा दैव्या होतृभ्यः"—इति शंयुवाकप्रैषः[3]। हे होतः! शंयोर्बार्हस्पत्यस्य ऋषेरार्षम् ब्रूहि। 'स्वगा' स्वस्थानगामिनं त्वां[4] 'दैव्या' देवेभ्यो 'होतृभ्यः' परिधिशरीरेभ्योऽत्र ह्रयन्ताम्, परिधय इत्यर्थः; 'मानुषेभ्यः' तु होतृभ्यः 'स्वस्तिः' अविनाशोऽस्त्वित्येवं रूपं वाक्यं[5] 'ब्रूहि' इति ॥

---

१— "संवदस्वागानग्नीदगञ्छ्रावय श्रौषट्"—इत्येता आहुतयः का० श्रौ० ३. ६. १६ सूत्रे स्मृताः।

२— 'शम्युवाक'—इति ठ। एव मिह सर्वत्रैव; मुद्रितकात्यायनभाष्येऽपि।

३— उत्तरस्यां कण्डिकायां द्रष्टव्यः। "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि"—इति का० श्रौ० ३. ६. १६ सूत्रेऽपि संस्मृतः। शंयुवाकमन्त्रस्तु तै० ब्रा० ३. ५. ११, तै० आ० ३. १. १ च आम्नातः। तद्विधिब्राह्मणं व्याख्यानञ्च तै० सं० २. ६. १० संश्रुतः।

४— नैतत् पदम् ठ-पुस्तके। 'स्वस्थानगामिभ्यः'—इति ठ।

५— 'अविनाशोत्यस्यार्थरूपं वाक्य'—इति ठ।

श्रुतिस्तु साङ्केतिकं गूढतर[1] मर्थं व्याचष्टे।— तत्र च यथैव प्रहरणसम्बन्धसूक्तवाकप्रैषसम्बद्ध माश्रावणम्, अनुषङ्गतः परिधीना मुपकारक मित्युक्तम् ; तथेहापि परिधिप्रहरणसम्बन्धशंयुवाकप्रैषसम्बद्धा व्याहृतयः, अनुषङ्गात् प्रस्तरहृत्तान्तं प्रकाशयन्तीति दर्शयति। "संवादयैनं देवैरिति। प्रिय मिवातिथि मागतैः[2] देवैः सम्भाषयेत्यर्थः। णिचो लोप मत्र दर्शयति। "अगानग्नीदिति। गमनद्रढिम्ने। त मेवाग्नीधं पृच्छति— किं गतोऽयं यजमानो येन संवाद्यते ? न गत इतीतरेणोक्तेऽध्वर्युराह— त मेव तर्हि मद्वचनेन श्रावयेत मिति। अग्नीत्त्वाह— "श्रौषडिति। "विदुर्वा एन मिति जानन्त्येवैनं देवाः; उपकारित्वादनाख्यात मपीत्यर्थः। "अनु वा एन मभुत्सतेति"। पूर्वं मेवायं बुद्धो देवैरित्ययं वा श्रौषडित्यस्यार्थः॥ २० ॥

"अथाह स्वगा"। "तदस्मै मानुषाय"—इति। प्रयोगे बहूनां मानुषाणां होतृणा मभावादेकवचनस्थाने एवैतद्बहुवचन मिति दर्शयति॥ २१ ॥

"अथ परिधीन्"। प्रसज्ञा[3]॥ २२ ॥

"अथ जुह्वम्"। 'सम्प्रगृह्णाति' सङ्गते उद्गृह्णाति संस्रवहोमाय, आज्यशेषस्य स्वगाकाराय च। कुत एतत् ? मन्त्रवर्णाद्[4], वाक्यशेषाच्च। "आहुतिर्भूत्वेति। एतेन 'प्रस्तर मनुसमस्यति', 'परिधी-

---

१— 'स्थूलतर'–इति ज, भ, ठ। २— 'माहतैः'–इति ठ।
३— इह द्वौ मन्त्रौ— वा० सं० २. १७. १, २। तत्र, यं परिधि मित्याद्येन प्रथमम्, अग्नेःप्रिय मित्यन्तेन युगपदितरौ। का० श्रौ० ३. ६. १७ सू० द्रष्टव्यम्। ४— 'सꣳस्रवभागाः'–इति मन्त्रः— वा०सं० २. १८. १।

ननुप्रहरति'—इत्येते[1] अपि होमचोदने एव वक्तव्ये। "अदो हैवा-हुतिम्"—इति परिधिसंस्काराशङ्कां निवर्त्तयति। एवं ह्याशङ्क्यते।—"यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यम्"—इतिवचनाद् हविरभिघारणीयम्, अनन्तर मेव च हुताः परिधयः; तेऽभिघा रिताः[2] आहुतिर्भवति; अतस्तेषा माहुतित्वायैते स्रुचौ सम्प्रगृह्णीते, न पृथगेव संस्रवहोमः कर्मेति; तन्निराकरोति। अत एव परिधय आहुतिरूता ये ते आज्येन जौहवेनाक्तास्तस्मान्न तेषा माहुति-त्वाय स्रुचौ सम्प्रगृह्णीते; किं तर्हि? 'आहुतिर्भूत्वा'[3] इद मेवाज्यं 'देवलोकं' गच्छेदित्येवमर्थं 'सम्प्रगृह्णाति'। यथैव प्रस्तरपरिधीनां स्रगाकारो द्युक्तः[4], एव माज्यशेषस्यापि विलग्नस्येत्यभिप्रायः ॥२३॥

"स वै विश्वेभ्यः"। 'अपिलिन्यः' भागिन्यः; अत्र वय मपीत्येवं मन्यन्ते ॥ २४ ॥

"स सम्प्रगृह्णाति"[5]। "संस्रवो ह्येवेति। यदा यः 'परिशिष्टः संस्रवः', तदा तद्भाजः संस्रवभागा एव भवन्तीत्यभिप्रायः। "प्रस्तरश्च होति। प्रस्तरे परिधिषु च हुतेषु तदिन्धनोऽग्निः शरीरं येषां ते, 'प्रस्तरेष्ठाः परिधेयाश्च' भवन्त्येवेत्यभिप्रायः॥ २५ ॥

"स यस्यानसः"। 'विमुञ्चन्ति' जुह्वपभृतौ। यतो युनज्मेति व्याख्यातम् ॥ २६ ॥

---

१— १८, २२ कण्डिके द्रष्टव्ये। का० श्रौ० ३.६.१३,१४,१७ सूत्राणि।
२— 'ऽभिघारणेन'—इति ठ। ३— 'आहुतिं हुत्वा'—इति ठ।
४— 'प्रस्तरपरिधीना मञ्जनादिनावाहन मुक्तम्'—इति ठ।
५— मन्त्रस्तु वा० सं० २.१८.२। का० श्रौ० ३.६.१८ सू० द्रष्टव्यम्।

"युञ्जौ ह वा एते"। विमोचनार्थवादोऽयम्। तत्र च "यज्ञं वा अनु प्रजाः"— इत्यधिभूतं वक्ष्यते[1], तदुपक्रमार्थं 'युञ्जौ' योक्तव्यावश्यौ 'एते यज्ञस्य यत् स्रुचौ'—इत्याह। "स यं निधायाववदेदिति। प्रक्रमार्थप्राप्तं चरकश्रुतिप्राप्तं च निधायावदानं प्रतिषेधति। 'वाहनं' वाहयति तदेभिरिति वाहन मश्वादि, यथा तत् 'अवार्च्छेत्' अधःपतेत्[2] वाह्यमानम्, 'एवं' निधानं स्रुचोः प्राग्विमोकादधस्खलनम्, 'तत्' यज्ञस्य स्यादित्यर्थः। "स एतत् खिष्टकृतीति। ये चरतां युङ्क्ते, 'ते' 'खिष्टकृति' अतीते इति शेषः। 'वि' अपरिसमाप्तोऽर्थः[3]। विमुच्यतेऽस्मिन्निति 'विमोचनं' स्थानम्, तत् 'आगच्छतः'। 'ते' 'तत्' तत्र 'सादयति' अध्वर्युः, 'तत्' तत्र 'विमुञ्चति'। विश्रामार्थम् 'पुनः' च 'अनुयाजेषु' प्रयुङ्क्तेषु तदन्ते च विश्रामार्थ मेव पुनः 'विमुञ्चति'। 'पुनः' च 'सम्प्रगटव्याति' 'प्रयुङ्क्ते'; तदन्ते च कृतार्थः सन् 'गतिं' गतम् 'अभियुङ्क्ते' करोति। मन्त्रेण देशनियमेन च गम्यत इति 'गतिः' अध्वा गन्तव्यः। 'यां गतिं' य मध्वानम् 'अभि'गन्तुं 'युङ्क्ते', 'तां गतिं' त मध्वानं 'गत्वा' 'विमुञ्चते'। "यज्ञं वा अनुप्रजाः"—इत्यधियाज्ञिकयोर्योगविमोकयोरधिभूतवचनम्। 'साध्वौ—इति 'सुखे'—इत्यस्य व्याख्यानम्; 'साधौ'—इति च 'सुखे'—इत्यस्य। 'सुखं' सुखम्, तत्र साध्वित्यभिप्रायः[4] ॥ १७ ॥ १ ॥ [८. ३.] ॥

---

१— ५६५ पृ० १० पं०, इहैव च १६ पं० द्रष्टव्यम्।

२— 'अधः क्षयते'—इति ठ। ३— निरु० १. १. ५।

४— का० श्रौ० सू० ३. ६. ६८। मन्त्रस्तु— वा० सं० २. १९. १।

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये
अष्टमस्य तृतीयं ब्राह्मणम् ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम्[1] ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये
अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

१— ५५७ पृ० २, ३ टीप्पन्यौ द्रष्टव्ये; एव मिश्रोत्तरत्रापि सर्वत्र ।

[ अथ नवमाध्याये प्रथमं ब्राह्मणम् ]



स यन्नाह । इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति यदृतो होतान्वाह सूक्तैव* तदाह यजमानायैवैतदाशिष माशास्ते तद्वा ऽएतदुपरिष्टाद्यज्ञस्याशिष माशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिष माशास्ते ॥ १ ॥

यज्ञं वा ऽएष जनयति । यो यजत ऽएतेन ह्युक्ता† ऽऋत्विजस्तन्वते तं जनयन्त्यथाशिष माशास्ते ता मस्मै यज्ञ ऽआशिषः सन्नमयति या माशिष माशास्ते यो माजीजनतेति तस्माद्वा ऽउपरिष्टाद्यज्ञस्याशिष माशास्ते ॥ २ ॥

देवान्वा ऽएष प्रीणाति । यो यजत ऽएतेन यज्ञेन-ऽर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान् प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वाथाशिष माशास्ते ता मस्मै देवा ऽआशिषः सन्नमयन्ति या

* 'सूक्ता ऽइव'-इति च । 'सूक्तानि'-इति भा०-सम्मत इति डा०-वेबरः ।

† 'ह्युक्ता'-इत्यपि दृष्टो डा०-वेबरेण ।

माशिष माशास्ते यो नोऽग्रैषीदिति तस्माद्वा ऽउप-
रिष्टाद्यज्ञस्याशिष माशास्ते ॥ ३ ॥

अथ प्रतिपद्यते। इदं द्यावापृथिवी भद्र मभूदिति
भद्रꣳ ह्यभूद् यो यज्ञस्य सꣳस्था मगन्नाध्म सूक्तवाक
मुत नमोवाक मित्युभयं वा ऽएतद्यज्ञ ऽएव यत्
सूक्तवाकश्च नमोवाकश्चाराध्म यज्ञ मविदाम यज्ञ
मित्येवैतदाहाग्ने त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथि-
व्यो*रित्यग्नि मेवैतदाह त्वꣳ सूक्तवागस्युपश्रुवत्यो†-
रनयोर्द्यावापृथिव्योरित्योमन्वती तेऽस्मिन् यज्ञे यज-
मान द्यावापृथिवी स्ता मित्युन्नवत्यौ तेऽस्मिन् यज्ञे
यजमान द्यावापृथिवी स्ता मित्येवैतदाह ॥ ४ ॥

शङ्गवी‡ जीवदानू ऽइति। शङ्गवी ते जीवदानू
स्ता मित्येवैतदाहात्रस्नू ऽअप्रवेदे ऽइति माह§ कस्माच्चन॥
प्रचासीर्म्मो त ऽइदं पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥५॥

उरुगव्यूती ऽअभयं कृताविति। उरुगव्यूती तेऽभये
स्ता मित्येवैतदाह वृष्टिद्यावा रीत्यापेति वृष्टिमत्यौ
ते स्ता मित्येवैतदाह ॥ ६ ॥

---

* 'दिवस्पृथिव्यो'–इत्यपि दृष्टो डा०-वेबरेण।

† '०श्रृणवत्यो-'— इति क।

‡ 'शङ्गवी'–इति, 'शङ्गवी'–इति च दृष्टौ डा०—वेबरेण।

§ 'नाह'–इत्यपि डा०-वेबर-दृष्टः। ‖ 'कस्माचन'–इति च।

शम्भुवौ मयोभुवाविति। शम्भुवौ ते मयोभुवौ स्ता मित्येवैतदाहोर्ज्जस्वती च पयस्वती चेति रसवत्यौ न उपजीवनीये स्ता मित्येवैतदाह ॥ ७ ॥

तूपचरणा च स्वधिचरणा चेति। तूपचरणा ह तेऽसावस्तु या मधस्तादुपचरसि स्वधिचरणो न इयमस्तु या मुपरिष्टादधिचरसीत्येवैतदाह तयोराविदीति तयोरनुमन्यमानयोरित्येवैतदाह ॥ ८ ॥

अग्निरिदꣳ हविः। अजुषतावीवृधत महो ज्यायोऽकृतेति तदाग्नेय माज्यभाग माह सोम इदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तत्सौम्य माज्यभाग माहाग्निरिदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति त माह ॥ ९ ॥

अथ यथादेवतम्। देवा आज्यपा आज्य मजुषन्तावीवृधन्त महो ज्यायोऽक्रतेति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा अग्निर्होत्रेणेदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तदग्निꣳ होत्रेणाजुषतेत्येवं या इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति तद्यजमानस्यैवैतत्समृद्धि माशास्ते यद्धि देवा हविर्जुषन्ते तेन हि

मह्वज्जयति तस्मादाहाजुषतेत्यवीवृधतेति यद्वै देवा हविर्जोषयन्ते तदपि गिरिमाणं कुर्वते तस्मादाहा-वीवृधतेति ॥ १० ॥

महो ज्यायोऽक्रतेति । यन्नो वै देवानां महस्त२ ह्येतज्ज्याया२स मिव कुर्वते* तस्मादाह महो ज्यायो-ऽक्रतेति ॥ ११ ॥

अस्या मृधेद्धोचायां देवङ्गमाया मिति । अस्या२ राध्नोतु होचायां देवाङ्गमाया मित्येवैतदाहाशास्तेऽयं यजमानोऽसाविति नाम गृह्णाति तदेनं प्रत्यक्ष माशिषा सम्पादयति ॥ १२ ॥

दीर्घायुत्व माशास्त इति । सा यामुचोत्तरा देव-यज्या तदिह प्रत्यक्षं दीर्घायुत्वम्† ॥ १३ ॥

सुप्रजास्त्व माशास्त इति । तद्यदमुच भूयो हवि-ष्करणं तदिह प्रत्यक्ष२ सुप्रजास्त्वं प्रशासन२ स कुर्याद्य एवं कुर्यादुत्तरां देवयज्या माशास्त इति त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत् पशून् ॥ १४ ॥

भूयो हविष्करण माशास्त इति । तदेव तत्सजात-वनस्या माशास्त इति प्राणा वै सजाताः प्राणैर्हि सह जायते तत् प्राणानाशास्ते ॥ १५ ॥

---

* 'कुर्वते'—इति च। † 'दीर्घायुत्व२'—इति च।

दिव्यं धामाशास्त इति। देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोक एवैन मेतदपित्विनं करोति यदनेन हविषाशास्ते तदश्यात्तदृध्यादिति यदनेन हविषाशास्ते तदस्मै सर्वꣳ समृध्यता मित्येवैतदाह ॥ १६ ॥

ता वा एताः* । पञ्चाशिषः करोति तिस्र इडायां ता अष्टावष्टाक्षरा वै गायत्री वीर्यं गायत्री वीर्य मेवैतदाशिषोऽभिसम्पादयति ॥ १७ ॥

नातो भूयसीः कुर्यात् । अतिरिक्तꣳ ह कुर्याद् यदतो भूयसीः कुर्याद् यद्वै यज्ञस्यातिरिक्तं द्विषन्तꣳ हास्य तद् भ्रातृव्य मभ्यतिरिच्यते तस्मान्नातो भूयसीः कुर्यात् ॥ १८ ॥

अपीद्वै कनीयसीः सप्त† । तदस्मै देवा रासन्ता मिति तदस्मै देवा अनुमन्यन्ता मित्येवैतदाह तदग्निर्देवो देवेभ्यो वनुतां वय मग्नेः परि मानुषा इति तदग्निर्देवोदेवेभ्यो वनुतां वय मग्नेरुध्यस्मा एतद्वनवामहा इत्येवैतदाह ॥ १९ ॥

इष्टञ्च वित्तञ्चेति। एषिषुरिव वा एतद्यज्ञं त मविदंस्तस्मादाहेष्टञ्च वित्तञ्चेत्युभे चैनं द्यावापृथिवी

---

* 'एताः'—इति च । † 'सप्त'—इति च ।

ऽअꣳहसस्पाता मित्युभे चैनं द्यावापृथिवी ऽआर्त्तेर्गो-
पायता मित्येवैतदाह ॥ २० ॥

तदु हैक ऽआहुः। उभे च मेति तथा होताशिष
ऽआत्मानं नान्तरेतीति तदु तथा न ब्रूयाद् यज-
मानस्य वै यज्ञ ऽआशीः किन्नु तत्रऽर्त्विजां यां वै काञ्च
यज्ञ ऽऋत्विज ऽआशिष माशासते यजमानस्यैव सा
न ह स ऽएतां कचनाशिषं प्रतिष्ठापयति य ऽआहोभे
च मेति तस्माद् ब्रूयादुभे चैन मित्येव ॥ २१ ॥

इह गतिर्व्वामस्येति। तद्युदेव यज्ञस्य साधु तदेवा-
स्मिन्नेतद्दधाति तस्मादाहेह गतिर्वामस्येति ॥ २२ ॥

इदं च नमो देवेभ्य ऽइति। तद्यज्ञस्यैवैतत् सꣳस्थां
गत्वा नमो देवेभ्यः करोति तस्मादाहेदञ्च नमो
देवेभ्य ऽइति* ॥ २३ ॥

अथ शंयोराह†। शंयुर्ह‡ वै बार्हस्पत्योऽञ्जसा यज्ञस्य
सꣳस्थां व्विदाञ्चकार स देवलोक मपीयाय तत्तदन्त-
र्हित मिव मनुष्येभ्य ऽआस ॥ २४ ॥

तद्वा ऽऋषीणा मनुश्रुत मास। शंयुर्ह वै बार्ह-
स्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदाञ्चकार स देवलोक
मपीयायेति ते ता मेव यज्ञस्य सꣳस्था मुपायन्

* 'ऽइति'–इति च। † 'शम्योराह'–इति च।
‡ 'शम्युर्ह'–इति च। च-पुस्तके त्वेव मेवोत्तरत्रापि सर्वत्र।

याᳬं शंयुर्बार्हस्पत्योऽवेद्यच्छंयोरभुवंस्ताम्वेवैष एतद्यज्ञस्य सᳬंस्था मुपैति याᳬं शंयुर्बार्हस्पत्योऽवेद् यच्छंयोराह तस्माद्वै शंयोराह॥ २५ ॥

स प्रतिपद्यते। तच्छंयोरावृणीमह इति तां यज्ञस्य सᳬंस्था मावृणीमहे याᳬं शंयुर्बार्हस्पत्योऽवेदि-त्येवैतदाह ॥ २६ ॥

गातुं यज्ञाय गातुं यज्ञपतय इति। गातुᳬं ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सᳬंस्थां दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य इति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहोर्द्ध्वं जिगातु भेषज मित्यूर्द्ध्वं नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥ २७ ॥

शन्नो ऽअस्तु द्विपदे शं चतुष्पद इति। एतावद्वा ऽइदᳬं सर्वं यावद् द्विपाच्चैव चतुष्पाच्च तस्मा ऽएवैतद्य-ज्ञस्य सᳬंस्थां गत्वा शं करोति तस्मादाह शन्नो ऽअस्तु द्विपदे शं चतुष्पद ऽइति* ॥ २८ ॥

अथानयेत्युपस्पृशति। अमानुष ऽइव वा ऽएतद् भवति यदार्त्विज्ये प्रवृत ऽइयं वै पृथिवी प्रतिष्ठा

---

* 'ऽइति'--इति ग, 'ऽइति'--इति च ।

तदस्या मेवैतत् प्रतिष्ठायां प्रतितिष्ठति तदु खलु पुनर्म्मानुषो भवति तस्मादनयेत्युपस्पृशति ॥ २६ ॥ २ ॥

॥ इति सप्तमप्रपाठके द्वितीयं ब्राह्मणम् [६. १.] ॥

"स यत्राह"। आध्वर्यवः सूक्तवाकप्रैषः शंयुवाक[1]प्रैषश्चाधस्तादुक्तः[2], तत्प्रसङ्गात् सूक्तवाकशंयुवाकयोर्द्वयोरेतद्ब्राह्मणम्[3]। तत्रापि सूक्तवाकस्य प्रयोजनं विवक्षुः कालसम्बन्धागत[4] मुपादाय प्रयोजन माह— "स यत्राहेति। यस्मिन् कालेऽध्वर्युराह "इषिता दैव्या"— इत्यादि[5], 'अतः', अत इति सर्वनामव्यत्ययो द्रष्टव्यः, तत ऊर्द्धं 'होता' 'यदाह' "इदं द्यावापृथिवी"—इत्यादि[6], 'तत्' 'सूक्तवान्याह[7]'। इति सूक्तवाकशब्दनिर्वचनम्। शोभनार्थत्वाच्छोभनादिवचनानि सूक्तानि, ततश्च सूक्तानां वाकः वाचको ग्रन्थः सूक्तवाक इत्येवं सूक्तवाकशब्दो निर्वाच्य इत्यभिप्रायः। "यजमानायेति सूक्तवाकस्य सङ्क्षेपार्थाभिधानम्। यदपि चात्रातीतार्थकीर्त्तनं तदपि

१— 'शम्युवाक'-इति ठ। एव मित्तोत्तरत्रापि सर्वत्रैव।

२— ५६०पृ० ७पं० ( 'इषिता दैव्या' ), ५६२पृ० ६पं० ( 'स्वगा दैव्या' )।

३— 'सूक्तवाकशंयुवाकयोरेतद्ब्राह्मणम्'-इति ठ।

४— 'कालसम्बन्धगत'-इति भ, ठ।

५— का० श्रौ० सू० ३. ६. १ द्रष्टव्यम्, ५७१ पृ० टीप्पणी च।

६— ५८०पृ० ३पं०, ५८७पृ० १२पं० ( का० ४ )।

७— 'सूक्तान्याह'-इति भ, ठ, ढ।

आशीःपर मेवेति दर्शयिष्यति—"तद्यज्ञस्यैवैतत्समृद्धिं माशास्ते"—इति[1]। "तदा एतदिति कारणविवक्षयोपन्यासः ॥ १ ॥

"यज्ञं वा"। 'एषः' 'यः' यजमानः 'मा' 'अजीजनत' जनितवान्, 'अस्मै' तस्मै 'आशिषं' सन्नमयामीति[2] मन्यमानो 'यज्ञः' यजमानम् उत्तरकालं 'सन्नमयति'[3], न प्रागित्यभिप्रायः ॥ २ ॥

"देवान्वा एषः"। वाशब्दः समुच्चये; हविभिश्च यजुर्भिश्चाहुतिभिश्चेत्यर्थः। 'देवान्' 'प्रीत्वा' तर्पयित्वा, शास्त्रपरिषदीव सन्तप्रस्ने[4](!) सन्दत्त्वा(!), 'तेषु' देवेषु, तेषां मध्ये 'अपित्वी' भागी भवति। भागी हि भागं प्रार्थयमानो लभते, नाभागीत्यभिप्रायः। 'यो नः' 'अप्रैषीत्' तर्पितवान्, 'तस्मै' 'आशिषं' सन्नमयाम[5] इति मन्यमाना 'देवाः' 'सन्नमयन्ति'। तच्चोर्द्ध्वं यज्ञात्, न प्रागित्यभिप्रायः ॥ ३ ॥

"अथ प्रतिपद्यते"। होता वक्तु मारभत इत्यर्थः। "इदं द्यावापृथिवी"—इत्यादिः सूक्तवाकः[6]। तत्रादौ तावत् हे 'द्यावापृथिव्यौ!' 'इदं' तावद् युवयोः प्रसादादस्माकं कल्याणं जात मेव। किम्? 'आर्ध्म' ऋद्धवन्तः[7], 'सूक्तवाकं' देवान् स्तुतवन्तो वय मित्यर्थः। 'उत' अपि 'नमोवाकम्' अन्नदानवचनञ्च प्राप्तवन्तः। यज्ञेन इय मपि भवेदिति देवता इष्टा अस्माभिरित्यर्थः। अधुना युवयोरेव प्रसादादिदं 'सूक्तोच्यं' सूक्तवचन मृद्ध्यास्मेत्याशीः। 'अग्ने त्वम्'—

१— १०क० ( ५८१पृ० १६पं० )। २— 'सन्नयामीति'—इति ठ।
३— 'सन्नयति'—इति ठ। ४— 'शास्त्रपरिषवसम्प्रश्ने'—इति ठ।
५— 'सन्नयाम'—इति ठ। ६— तै० ब्रा० ३. ५. १०।
७— 'ऋद्धवचनजुष्टं'—इति ठ।

इति अग्निं होतार मुपधावति। हे भगवन्! 'अग्ने!' 'त्वम्' एव सूक्तानां वक्ता 'असि'; नाहं मानुष इति विदित्वा[1] मा मधिष्ठातु मर्हसीत्यभिप्रायः। 'उपश्रृण्वत्योः', 'द्यावापृथिव्योरिति' एकान्त मनक्त[2] मपि कुर्यात्; न जनसंसदीत्यभिप्रायः।

"ओमन्वती"—इत्याग्नीध्रो यजमानं प्रत्यक्षीकृत्य। "तयोराविदि, "अग्निरिद मित्यादि[3] मिथो हेतुवचनम्,— यस्माद्द्यावापृथिव्योरनु-मन्यमानयोरग्न्यादयो हवींष्यजुषन्त, तस्माद्द्यावापृथिव्यौ ओमन्व-दादिगुणौ स्ता मिति सम्बन्धः। "अस्या मृधेदिति। परोक्षीकृत्य यजमानं तस्मा आशिष आशास्ते। "उत्तरां देवयज्या मित्यादि। "यदनेन हविषेत्याशिष एव समाप्ते "इदन्न नमो देवेभ्य इति याचितेभ्यो निह्नवः। एत मेवार्थं 'भद्रं अभूत्'—इत्यादि[4] विवृण्वन् दर्शयति। 'अरात्स्म यज्ञम्'—इति तत् "आर्ध्म सूक्तवाक मित्यस्य पर्यायवचनम्; 'अरात्स्म'—इत्यस्यापि 'अविदाम'—इत्येतत्पर्याय-वचनम्; संसाधितवन्तो लब्धवन्तो यज्ञं, वय मित्यर्थः। "उपश्रुती"। उपश्रृणोतीत्युपश्रुतिः, ततः सप्तमीद्विवचने उपश्रुत्योरिति प्राप्तम्, ततश्छान्दसः पूर्वसवर्णः 'उपश्रुती'—इति; 'उपश्रृण्वत्योरिति तद् दर्शयति। "दिवस्पृथिव्योः"— इत्यस्य शब्दसमाधिः 'द्यावापृथिव्यो-रिति। "ओमन्वतौ" अवति तर्पयति इति 'ओमन्'[5] अन्नम्, तद्वती, ओमन्वत्यौ 'अन्नवत्यौ'—इति समाधिः॥ ४॥

---

१— 'वेदित्वा'—इति भ, ढ। २— 'मनक्तु'—इति ठ।
३— मन्त्रपाठो द्रष्टव्यः (तै० ब्रा० ३. ५. १०.)।
४— ५८० पृ० ४ पं० ("भद्र मभूत्"—इति मन्त्रस्य)।
५— 'ओमा'—इति ठ। निरु० ६. १. ५ द्रष्टव्यम्।

"शङ्गवी"। शश्व ते गावौ च शङ्गव्याविति प्राप्ते पूर्वसवर्णः। "जीवदानू" जीवनस्य दात्र्यौ[1]। अचसनशीले "अचसू"; अचसू च ते देवते उपासीनो न चस्यतीति देवधर्मं यजमाने दर्शयति— "माह कस्माच्चन प्रचासीरिति। "अप्रवेदे" प्रवेदनं प्रलाभः, नास्ति प्रवेदन मेतयोः[2] 'अप्रवेदे' दुर्लभे; तादृश्यौ चोपासीनस्य। 'पुष्टम्' पुष्टिरित्येतद् दुर्लभता न भवतीत्येतत् 'मो त इदं पुष्टं' 'कश्चन' कश्चिदपि 'प्रविदत' मा लभत इत्यतिदिशति ॥ ५ ॥

"उरुगव्यूती"। गावः अवन्ति तृप्यन्त्यस्या मिति 'गव्यूतिः' गोप्रचारः; सा च क्षेमउर्वी भवति। व्याघ्रादिभये चसन्ति, न दूरं ग्रामाद्गावो गच्छन्तीत्यनुर्वी गव्यूतिर्भवति। तेन गवां क्षेमहेतू द्यावापृथिव्यौ स्ता मित्यर्थः। "अभयं कृताविति। सामान्येना-भयङ्करे स्याता मिति। 'वृष्टिद्यावा' वृष्टेर्दात्र्यौ। ददातेर्वनिप्[3], यकारस्यागमः "आतो युक्"—इति[4]; वृष्टिदातारावितिं प्राप्ते। "रीत्यापा"। 'रीतिस्तृप्तिस्ता मापत इति 'रीत्यापा'; सुष्ठु वर्ष-वत्यावित्यर्थः ॥ ६ ॥

"शम्भुवौ"। दुःखोपशमनं 'शम्' भावयत इति 'शम्भुवौ' स्याता

---

१— 'जीवदानु-जीरदानु-शब्दावभिन्नार्थौ संहिताभेदात् भिन्नरूपौ श्रूयेते। एतत्पदसिद्ध्यर्थ मेव वार्त्तिककृता "इकि ज्यः सम्प्रसारणम्"—इति पठितम् ( पा० १. १. ४. )। तत्र "इकि जीवेरपि सिद्धं भवतीति च भाष्येष्टिः। 'जीरदानू'—इति तै० ब्रा० ३. ५. १०।

२— 'नास्ति प्रवेदनं प्रलाभ एतयोः'—इत्येव ठ।

३— पा० सू० ३. २. ७४। ४ —पा० सू० ७. ३. ३३।

मिति सर्वेण प्रार्थ्यते। 'मयः' सुखम्, अनुकूलवेदनीयम्, तद्भावयतः 'मयोभुवौ'। 'ऊर्जस्वती[1]' "ऊर्ज बलप्राणनयोः[2]"। ऊर्जयतीति 'ऊर्ग्' रसः, सोऽनयोरस्तीत्यूर्जस्वत्यौ। ऊर्जः मतुपि असुगागमः मकारस्य वत्वम्[3]। 'एतदाह'— "रसवत्यौ ते स्ता मित्याहेति। 'पयः' आप्यायनं स्थावरजङ्गमानां सोपघातकम्, तद्वत्यौ; तदाह— "उपजीवनीये स्ता मित्येवैतदाहेति ॥ ७ ॥

"सूपचरणा"। अक्लेशेनोपचर्यत इति सूपचरणा द्यौः; सा ह्यविरुद्धा अक्लेशेनैवोपचर्यते। एवं 'स्वधिचरणा' पृथिवी; तस्यां हि दृढाया मक्लेशेण चरन्ति। "छन्दसि गत्यर्थेभ्यः"—इति[4] खलर्थे युच् प्रत्ययः। एतदाह— "सूपचरणा ह तेऽसावस्त्वित्यादिना। आवेदनम् 'आवित्'। आवेदनेनात्र यज्ञविषया मतिर्लक्ष्यते। यस्य जानतः शक्रस्य यत् क्रियते, स तदनुमन्यत इति गम्यते ॥ ८ ॥

"अग्निरिदꣳ हविः"। "तदाग्नेय मिति समस्तार्थवचनम्। यदेतदग्निना हविषः सेचन मतीतं कीर्त्यत एवं तावत् आग्नेयाज्यभागं याग इत्याह। अथवा[5] आज्यस्यासौ भागश्चेत्याज्यभागः; आज्य मेव होतव्य मिति भागशब्दार्थं दर्शयति। एवं पुरोडाशेन वैलक्षण्यं भवति; इतरथा तत्र पुरोडाशेन यागो लक्ष्येत। 'अजुषत'— इत्यादींस्तु शब्दानग्रे[6] व्याख्यास्यति ॥ ९ ॥

---

१— तै० सं० २. ६. ९ द्रष्टव्यम्। २— धा० पा० चु० प० १५।

३— पा० सू० ८. २. ९। 'वकारस्य च भावम्'—इति ठ।

४— पा० सू० ३. ३. १२९। ५— नास्त्येतत् पदं ठ-पुस्तके।

६— १० क० द्रष्टव्यम् ( ५८१, ५६१ पृ० )।

"अथ यथादेवतम्"। या या देवता यष्टव्या, तां तां माहेति वर्त्तन्ते। "प्रयाजानुयाजा वै देवा आज्यपाः"—इति। प्रयाजानुयाजा देवता देवाना माज्यपा इत्यर्थः। 'अग्निः' 'होत्रेण'। "इत्थम्भूतलक्षणे तृतीया[1]। 'होत्रेण' देवताह्वानेन कर्मणा युक्तः 'अग्निः' 'हविः अजुषत' स्विष्टकृदित्यर्थः। एवं "या इष्टा इत्येतया यथादेवतस्यार्थं स्फुटीकरोति। ततश्चेष्टदेवतावाचिना मेव देवतापदाना मस्मिन् प्रदेशे मन्त्रत्वावगते विकृतावूहविधौ सेत्स्यतः प्रकृतौ च पौर्ण-मास्यमावास्यादेवतापदानां व्यवस्था भविष्यति। "यन्त्विह मामासे"—इत्येतदनुपपन्नम्; भूतानुवादस्वरूपत्वात्। "अजुषतेत्यस्य यदपि हेतुवचनं "यद्धि देवा हविर्जुषन्ते, तेन हि महज्जयतीति, तद-प्याशीस्त्वं न साधयति; किन्तर्हि "ओमन्वतीति; "अस्मिन् यज्ञे यजमानो द्यावापृथिवी स्ता मिति[2]; अत्राशिषो हेतुत्वेनोच्यते। "अग्निरजुषतेति। ततश्च यस्माद्द्यावापृथिव्योराविदि अग्निरजुषत, तस्माद्द्यावापृथिव्यौ ओमन्वती स्ता मित्याशीःपर मेवातीतजोषण-कीर्त्तन मित्युपपन्नं यज्ञसमृद्ध्याशीर्वचनम्। "यद्वै देवा हविर्जोष-यन्ते"-इति। स्वैरनुचरैः सेव्यन्ते; तेषां हि बहूनां तृप्तये यत् स्तोक मपि यजमानेन दत्तम्, तद् बहु कुर्वन्तीत्यर्थः ॥ १० ॥

"महो ज्यायोऽक्रतेति"। पूर्व मेकवचनान्तं व्याख्याय, इदं बहुवचनान्तं व्याचष्टे। व्याख्यानस्याशापितज्ञापनार्थम्। "यज्ञो वै देवानां महः"। महनं, महः; पूजा, विभूतिः। सा च यज्ञं देवा बहुतरं प्रशस्यतरं वा प्रागवस्थानं कुर्वन्ति ॥ ११ ॥

---

१— पा० सू० २. ३. २१। २— ५८०पृ० ६पं० द्रष्टव्यम्।

"अस्या ऋधेत्"। "तदेनं प्रत्यक्ष मिति। एतया आशिषा विशेषेण 'आशास्ते' 'अयं यजमानः' इति, स "ऋधेत्" 'राध्नोतु'। 'देवज्यायां' देवप्रापणशीलायाम्, यज्ञ इडायाम् "उपहूतोऽयं यजमान इति। आशीःशब्दाभावान्नामाभावाच्च परोक्षम् 'आशिषा सम्पादयति[1]' ॥ १२ ॥

"दीर्घायुत्व माशास्ते"। 'अमुत्र[2]' इडायाम्। 'उत्तरा देवयज्या' "उपहूतोऽयं यजमान उत्तरस्यां देवयज्याया मिति, 'तदिह' 'प्रत्यक्षं' श्रौतं 'दीर्घायुत्वम्' आशास्त इति दीर्घजीवित्व मुपदिश्यत इत्यर्थः ॥ १३ ॥

"सुप्रजास्त्व माशास्ते"। 'प्रशासनं' प्रशास्यन्तेऽनेन देवाः प्रार्थ्यमाना इति प्रशासनम्, पुरुषस्य साक्षात् स्वार्थपरत्वं 'कुर्यात्' इत्यर्थः। "उत्तरां देवयज्याम्"—इत्येवं देवार्थाशीःपूर्वकान् स्वार्थामाशीरन् यजमानाः। यजनीयदेवानां भवति च यथा जीवनादिचय मन्तर्गतम्, तथोक्त मेव[3] ॥ १४ ॥

"भूयो हविष्करण माशास्ते"। "तदेव तदिति। यदेवैतत् पूर्वं जीवनादिचयं देवपुरःसरम् "उत्तरां देवयज्या मित्युक्तम्[4], तदेतद् 'भूयोहविष्करण मिति। किमर्थं तर्हि? तदेवोच्यते— "तदेव तदिति; अर्थभेदात्। अन्या हि उत्तरा देवेज्या, पुनर्यागमात्र

---

१— ८. १. २९ क० द्रष्टव्यम् ( ५३१पृ० १पं० )।

२— ८. १. ३० क० द्रष्टव्यम् ( ५३१पृ० ६पं० )।

३— ८. १. ३१–३३ क० द्रष्टव्यम् ( ५३१पृ० ९–१६पं० )।

४— तै० ब्रा० ३. ५. १० ( पुरस्ताच्च ५८८ पृ० ९ पं० ) द्रष्टव्यम्।

मन्यद् 'भूयः' बहु 'हविष्करणम्'; प्रयोगवाहुल्यात्मक मनल्पहवि-ष्कत्वमेवेत्यपीमद्दक्रम्। सजाताः भ्रातरः, आत्मिकास्तु प्राणास्तेषाञ्च तस्य सम्भक्तिस्तेरवियोगः 'सजातवनस्या[1]'। 'वनस्' शब्दः कण्वादिषु द्रष्टव्यः। "कण्वादिभ्यो यक्[2]", वननं वनस्या ॥ १५ ॥

"दिव्यं धाम"। दिवि भवं 'दिव्यम्'। "देवलोके मेऽपीति। 'यो यजते', स एवमर्थं इह तावन्नामास्त्येव, येन कार्यं देवलोकेऽपि मे कथं नाम स्यादिति। तत्र स्थाम मात्मन आशास्त इत्यभिप्रायः। 'अश्यात्' "अशू व्याप्तौ[3]" प्राप्नोतु। 'व्यध्यात्' सम्दह्यताम् ॥ १६ ॥

"ता वा ऽएताः"। 'पञ्चाशिषः' उत्तरदेवयज्या, भूयोहविष्करणम्, सजातवनस्या, दिव्यं धाम, यदनेनेति च कर्मफलं समीहितम्; 'एताः पञ्च'। 'तिस्र इडायां[4]' देवयज्या, हविष्करणं "देवा म इदं हविर्जुषता मिति[5]। "वीर्यं गायत्री" वीर्यवती सा, यद्गायत्री श्येनो हि भूत्वा दिवः सोम माहरत् ॥ १७ ॥

"नातो भूयसीः"। शाखान्तराधीतानां प्रतिषेधः ॥ १८ ॥

"अपीद्वे कनीयसीः"। कनीयस्त्वे[6] कारणं प्रदेशान्तरे उक्तम्— "न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते तच्छ्रेयस मुत्तरावत्"-इति[7]।

---

१—"सजाताः प्राणानेव नान्तरेति"—इति तै० सं० २. ६. ९।

२—पा० ३. १. २७ सू०। ३—धा० पा० स्वा० प० १७।

४—८. १. ३०-३७ क० ( ५३१, ५३२ पृ० ) द्रष्टव्याः।

५—८. १. ३७ ( ५३३ पृ० ) द्रष्टव्यम्। ६—'भूयस्त्वे'—इति भ०।

७—उत्तरस्मिन् काण्डे १प्र० १ब्रा०. १२ क० द्रष्टव्या।

'रासन्ताम्' "रासृ दाने"[1] ददतु; कर्मभिर्व्यज्यमाना देवा अनुमन्यन्ता मिति भावः। 'तत्' 'अग्निः' होता 'देवः' 'देवेभ्यः' 'वनुताम्' "वनु याचने[2]" याचताम्। 'वयं' च मानुषा होतारः। आत्मनि बहुवचनम्[3]। 'अग्नेः' 'अधि'-शब्दोऽत्राग्नेरित्यस्य पञ्चम्यन्तत्व-द्योतनार्थः। अनेकपञ्चम्यर्थसम्भवेऽपादानार्थत्वद्योतकः[4] ॥ १९ ॥

"इष्टञ्च वित्तञ्च"। 'उभे च द्यावापृथिवी' 'एनम्' यजमानयज्ञं 'गोपायताम्' इति सम्बधः। 'इष्टं' कर्म, यज्ञः; सर्वकालं मनोरथै-र्वाञ्छित मित्यर्थः। 'वित्तं' तदेव लब्धम्। देवेषु 'ऐषिषुः' प्रार्थि-तवन्तः, ऋत्विग्यजमानाः। 'यज्ञम् त मविदन्' "विद्लृ लाभे[5]" लब्धवन्तः ॥ २० ॥

"तदु हैक ऽआहुः"। 'उभे च मा' मां द्यावापृथिवी इत्येवं होता ब्रूयात्। "एके आहुः"—"यजमानस्य वै यज्ञ आशीः, किन्तु तत्रर्त्विजाम्"-इति; न काश्चिदप्याशिष ऋत्विजा मित्यर्थः। कथम्? 'यां काञ्च' सर्वा मित्यर्थः; 'आशिष माशासते', 'यज-मानस्यैव सा' भवति; न त्वृत्विजाम्। ततश्च य एव सार्थी भवति, 'न' 'सः' 'क्वचन' क्वचिदपि 'एता माशिषं प्रतिष्ठापयति'। कथम्? यत्र तया प्रतिष्ठातव्यो यजमानः, तत्र शंसन्नाह। यस्त्वाहात्मनि, तत्र स न प्रतितिष्ठतीति। "तस्मादु ब्रूयात् उभे चैन मित्येव"-इति। उभे च मेतीत्येतच्छब्दस्यार्थः ॥ २१ ॥

---

१—धा० पा० भ्वा० आ० ६२६। २—धा० पा० त० आ० ७।
३—"नैकवचनं युञ्जीत गुरावात्मनि चेश्वरे"-इति।
४—पा० २. ३. २८ सू० भा० द्रष्टव्यम्। ५—तु० उ० १५२ धा०।

"इह गतिः"। 'इह' यजमाने 'गतिः' प्रतिष्ठा 'वामस्य' वननीयस्य[1] 'साधु', अस्तीति शेषः। "तद्यदेव यज्ञस्य साध्विति। असाध्वपि किञ्चिदस्यास्ति, तत् यजमाने माभूदित्यर्थः ॥ २२ ॥

"इदञ्च नमः"। इद मिति नमस्करणं प्रत्यक्षम्, तदाह 'नमस्करोति'-इति। होता 'देवेभ्यः' वैगुण्याशङ्कानिह्नवाय, यज्ञकृतकदर्थननिह्नवाय वा, वदेदित्यभिप्रायः ॥ २३ ॥

"अथ शंयोः"। शंयुर्नाम[2] बृहस्पतेः पुत्रः[3]। स यावदत्र लोके[4] आस्ते, तावत्तादृशी यज्ञस्य संस्था न भवति, यादृशीं 'स विदाञ्चकार'; द्युलोकगते तु शंयौ तत्समानवीर्या कनीयसी संस्था सम्भवतीत्येतदितिहासेनाह— "शंयोर्वाक मिति। विशेषत आह होता अध्वर्युणा प्रेषितः सन् 'अञ्जसा' ऋजु, सम्यगित्यर्थः। 'सः' च क्वचित्काले 'देवलोकम्' 'अपीयाय' अपिगतः। 'तत्' तदा 'तद्' विज्ञानं भवितव्यतावशादेव 'अन्तर्हितं' विच्छिन्नं 'मनुष्येभ्यः' बभूव ॥ २४ ॥

"तद्वा ऽऋषीणाम्"। कथं तस्याः संस्थायाः प्रतिसन्धेयम्, तदृषिभिः तत्काले श्रुतावानीय तस्याश्च कालं विदित्वा ता सधः[5] अवतारितवन्तः। तस्यास्त्वान्यूनवीर्यतायै आह— "ते ता मेवेति। यच्छंयोर्वाक मब्रुवन् ॥ २५ ॥

---

१—निरु० ४. ४. ५ द्रष्टव्यम्। २—'शम्युर्नाम'—इति ठ।
२—इत आरभ्य शंयुवाकमन्त्रव्याख्यानम्। तत्पाठस्तु तै० ब्रा० ३. ५. ११ अनुवाकः समग्रः। तद्व्याख्यानन्तु तै० सं० २. ६. १० द्रष्टव्यम्।
३—'यावद्देवलोके'—इति ठ। ४—'ता मेव'—इति ठ।

"स प्रतिपद्यते"। यत् 'शंयोः' सम्बन्धि संस्थानं शंयुना दृष्टम्, 'तत्' 'आवृणीमहे' प्रार्थयामहे ॥ २६ ॥

"गातुं यज्ञाय"। कीदृशम् ? 'गातुं' गमनं 'यज्ञाय' द्युलोकगमनम्, 'यज्ञपतये' अपि च, यज्ञे यजमाने च 'दैवी' देवेषु भवा 'स्वस्तिः' अविनाशः 'नः' अस्माकम् 'अस्तु'; 'स्वस्तिः' च 'मानुषेभ्यः' मानुषेषु च 'नः' अविनाशोऽस्तु। न इति ब्रुवन् स्वामिनं व्यपदिशति। 'ऊर्द्ध्वं' देवलोकं 'जिगातु' जयतु, 'भेषजं' संसारव्याधिविनाशनं यज्ञाख्यं कर्म। यज्ञेन हि योजितः स यजमानेन जित एव भवतीत्यभिप्रायः ॥ २७ ॥

"शन्नो ऽअस्तु"। यज्ञे गच्छति तदनुकारेण द्विपदादेरपि गमनं माभूदिति 'शं' सुख माशास्ते। एव मेव मन्त्रार्थं ब्राह्मणं व्याचष्टे, तत्प्रसन्न मेव ॥ २८ ॥

"अथानया"। 'अनया' दक्षिणस्य पाणेः कनिष्ठिकया 'इति' एव मित्यभिनयेन ('आवृणीमहे'-इत्यादौ ऋत्विक्के यतः प्रवृत्तो व्यावृत्तः[1]) पृथिव्या उपदर्शनं दर्शयति। "इयं वै पृथिवीति वाक्यशेषादन्यत्वनयेत्येवमन्तं मन्त्रं मन्यन्ते ;— अनयेत्येतेन मन्त्रेणोपस्पृशति, किम् ? वाक्यशेषात् पृथिवी मिति। तेषा मेव[2] कनिष्ठिकया पृथिवी मुपस्पृशतीति काण्वश्रुत्युपरोधः। कः पुनरुपस्पृशति ? "यदतो होतान्वाह"-इति[3] उत्तरत्र होतृशब्दश्रवणादध्वर्युरुपस्पृशति। "अमानुष इव वा ऽएतत्"-इति "अग्निर्देवो दैव्यो

---

१—नास्त्येष शब्दो ठ-पुस्तकादन्यत्र। २—'अथ'—इति ठ।

३—पुरस्तात् ( ६. १. १.—५७६ पृ० ) द्रष्टव्यम्।

होता[1]"-इति म्रियमाणोऽग्निभावं[2] चित्तेनोपगतः स पृथिवीस्पर्शने-नाभिनयेन मानुषायतनं[3] पृथिवी मुपगतोऽस्तीति दर्शयति। पृथिव्युपगमेनापि तत्स्थमानुषभावोपगम मुपलक्ष्य। योनिविमोचने वक्ष्यत्येतद्—"यद्धि युक्तं न विमुच्यते, प्र तद्ह्यते"-इति[4]; तस्मात् सर्वयज्ञेषु युक्तं[5] विमोक्तव्यम् ॥

एवं प्रासङ्गिकं होतृब्राह्मणं समाप्तम्[6] ॥ २९ ॥ [ ९. १. ]

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य शासितुः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम्[7] ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु
नवमाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

१—५. १. ५ क० ( ३२७ पृ० १९ पं० ) द्रष्टव्यम्।

२—'ऽग्निभवं'-इति भ, ठ। ३—'मानुषयजनं'-इति ठ।

४—उपरिष्टात् ( ६. ७. ४. ८. ) द्रष्टव्यम्।

५—'सर्वयज्ञैर्युक्तम्'—इति भ, ठ।

६—"स आश्राव्याह"-इत्यादिः पुरस्तादुक्तः ( ५६० पृ० ७ पं० ) समालोच्यः। तथा "अध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकऽ होता प्रतिपद्यते"—इत्युपरिष्टाच्च पुनर्वक्ष्यति ( २. ५. २. ४२. )।

७—५५७ पृ० २-३-टीप्पन्योरिष्टव्यपाठभेदा द्रष्टव्याः।

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति। जुहूं च स्रुवं चाध्वर्युरादत्ते व्वेदꣳ होताज्यविलापनी मग्नीत्* ॥ १ ॥

तद्धैकेषा मध्वर्युः†। पूर्वेणाहवनीयं पर्येति तदु तथा न कुर्याद्बहिर्द्धा ह यज्ञात्स्याद्यत्तेनेयात् ॥ २ ॥

जघनेनो हैव पत्नीम्। एकेषा मध्वर्युरेति नो ऽएव तथा कुर्यात् पूर्व्वार्द्धो वै यज्ञस्याध्वर्युर्जघनार्द्धः पत्नी यथा भसत्तः शिरः प्रतिदध्यादेवं तद्बहिर्द्धा हैव यज्ञात्स्याद्यत्तेनेयात्‡ ॥ ३ ॥

अन्तरेणो हैव पत्नीम्। एकेषा मध्वर्युरेति नो ऽएव तथा कुर्यादन्तरियाद्ध यज्ञात् पत्नीं यत्तेनेयात् तस्मादु पूर्वेणैव गार्हपत्य मन्तरेणाहवनीयञ्चैति तथा ह न बहिर्द्धा यज्ञाद्भवति यथो ऽएवादः प्रचरन्नन्तरेण सञ्चरति स ऽउ ऽएवास्यैष सञ्चरो भवति ॥ ४ ॥

अथ पत्नीः संयाजयन्ति। यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात् प्रजायमाना मिथुनात् प्रजायन्ते मिथुनात् प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते तदेना एतदन्ततो यज्ञस्य मिथुनात् प्रजननात् प्रजनयति तस्मान्मिथुनात्

---

* 'मग्नीत्'–इति च। † 'मध्वर्युः'–इति च।

‡ '०नेयात्'–इति च।

प्रजननादन्ततो यन्नस्येमाः प्रजाः प्रजायन्ते तस्मात् पत्नीः संयाजयन्ति ॥ ५ ॥

चतस्रो देवता यजति। चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुन मेवैतत् प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥ ६ ॥

ता वा ऽआज्यहविषो भवन्ति। रेतो वा ऽआज्यꣳ रेत ऽएवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥ ७ ॥

तेनोपाꣳशु चरन्ति। तिर ऽइव वै मिथुनेन चर्यते तिर ऽइवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥ ८ ॥

अथ सोमं यजति। रेतो वै सोमो रेत ऽएवैतत् सिञ्चति तस्मात् सोमं यजति ॥ ९ ॥

अथ त्वष्टारं यजति। त्वष्टा वै सिक्तꣳ रेतो विकरोति तस्मात् त्वष्टारं यजति ॥ १० ॥

अथ देवानां पत्नीर्यजति। पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद् देवानां पत्नीर्यजति ॥ ११ ॥

स यत्र देवानां पत्नीर्यजति। तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य एवैतत्तिरः करोति तस्मादिमा

मानुष्य स्त्रियस्तिर इवैव पुꣳसो जिघत्सन्ति या ऽइव ता ऽइवेति ह स्माह याज्ञवल्क्यः ॥ १२ ॥

अथाग्निं गृहपतिं यजति। अयं वा ऽअग्निर्लोक ऽइम मेवैतल्लोक मिमाः प्रजा ऽअभिप्रजनयति ता ऽइमं लोक मिमाः प्रजा ऽअभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥

तदिडान्तं भवति। न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वा ऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वा ऽअनु जाया तदेवास्यापि पत्नी स्वगाकृता भवतीयसि तꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात् तस्मा-दिडान्त मेव स्यादतो प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥

स यदि प्रस्तरस्य रूपं कुर्याद्। यथैवादः प्रस्तरेण यजमानꣳ स्वगाकरोत्येव मेवैतत् पत्नीꣳ स्वगा-करोति ॥ १५ ॥

स यदि प्रस्तरस्य रूपं कुर्याद्*। वेदस्यैकं तृण माच्छि-द्याग्रं जुह्वा मनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम्† ॥ १६ ॥

अथाग्नीदाहानुप्रहरेति। तूष्णी मेवानुप्रहृत्य चक्षुष्पा ऽअग्नेऽसि चक्षुर्मे पाहीत्यात्मान मुपस्पृशति तेनो ऽअप्यात्मानं नानुप्रवृणक्ति ॥ १७ ॥

---

* 'कुर्याद्'–इति च। † 'स्थाल्याम्'–इति च।

अथाह संवदस्वेति* । अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति† ॥ १८ ॥

अथ जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनन्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति ॥ १९ ॥

स वा ऽअग्नये सम्प्रगृह्णाति । अग्नेऽदब्धायोऽशीतमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीत‡मेत्यशिष्टो ह्यग्निस्तस्मादाहाशीतमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या ऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाहाविषं नः§ पितुं कृण्वित्यन्नं वै पितुरनमीवं न ऽइद मकिल्बिष मन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुत मेव मस्यैतद्भवति ॥ २०|| ॥

अथ व्वेदं पत्नी व्विस्रꣳसयति । योषा वै व्वेदिर्व्वृषा व्वेदो मिथुनाय वै व्वेदः क्रियतेऽथ यदेनेन यज्ञ उपालभते मिथुन मेवैतत्प्रजननं क्रियते ॥ २१ ॥

---

* 'संवदस्वेति'—इति च । † 'शंय्योर्ब्रूहीति'—इति च ।

‡ 'यवित्यशीत'—इति च । § 'ऽविषन्नः'—इति क ।

|| इतोऽनन्तर मिह 'शतं ८००'—इति पाठः क-पुस्तके ।

अथ यत्पत्नीं विस्रꣳसयति। योषा वै पत्नी वृषा वेदो मिथुन मेवैतत्प्रजननं क्रियते। तस्माद् वेदं पत्नी विस्रꣳसयति ॥ २२ ॥

सा विस्रꣳसयति। वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवंस्तेन मह्यं वेदो भूया इति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥ २३ ॥

त मा वेदेः सꣳस्तृणाति। योषा वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य वृषा योषा मधिद्रवति पश्चादेवैना मेतत् परीत्य वृष्णा वेदेनाधिद्रावयति तस्मादा वेदेः सꣳस्तृणाति ॥ २४ ॥

अथ समिष्टयजुर्जुहोति। प्राग्घ्ये यज्ञोऽनुसन्तिष्ठाता ऽइत्युथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत् प्रत्यङ्ङु हैवास्यैष यज्ञः सन्तिष्ठेत तस्माद्वा ऽएतर्हि समिष्टयजुर्जुहोति प्राग्घ्ये यज्ञोऽनुसन्तिष्ठाता ऽइति ॥ २५ ॥

अथ यस्मात्समिष्टयजुर्नाम। या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्व्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥ २६ ॥

अथ यस्मात्समिष्टयजुर्जुहोति। या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत ऽउप ह वै ता

ऽआसते यावन्न समिष्टयजुर्जुहोतीदं नु नो जुषस्वेति ता ऽएवैतद्यथायथं व्यवसृजति यत्र यत्रासां चरणं तदनु यज्ञं वा ऽएतदजीजनत यदेन मतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजुर्जुहोति ॥ २७ ॥

स जुहोति। देवा गातुविद ऽइति गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातु मितेति तदेतेन यथायथं व्यवसृजति मनसस्पत ऽइमं देवयज्ञꣳ स्वाहा वाते धा ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञꣳ सम्भृत्यै तस्मिन् यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्दधाति तस्मादाह स्वाहा वाते धा ऽइति ॥ २८ ॥

अथ बर्हिर्जुहोति। अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिंल्लोक* ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥ २९ ॥

तां वा ऽअतिरिक्तां जुहोति। समिष्टयजुर्ह्येवान्तो यज्ञस्य यदूर्ध्वꣳ समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिता ओषधयः प्रजायन्ते ॥ ३० ॥

स जुहोति। सम्बर्हिरङ्क्ताꣳ हविषा घृतेन स

* 'ऽअस्मिँल्लोक'–इति क।

